| | | | | | |
|---|---|---|---|---|---|
| २५ श्रीं | श्रीमहालक्ष्म्यै | पुष्ट्यै | नमः | वामोरुं | पूजयामि |
| २६ ,, | ,, | धनदायै | ,, | दक्ष जानुं | ,, |
| २७ ,, | ,, | धनैश्वर्यै | ,, | वाम जानुं | ,, |
| २८ ,, | ,, | शुद्धायै | ,, | दक्ष गुल्फं | ,, |
| २९ ,, | ,, | संभोगिन्यै | ,, | वाम गुल्फ | ,, |
| ३० ,, | ,, | भोगदायै | ,, | दक्ष पादं | ,, |
| ३१ ,, | ,, | धान्यै | ,, | वाम पादं | ,, |
| ३२ ,, | ,, | विधात्र्यै | ,, | सर्वांगं | ,, |

१ श्री ईश्वर्यै नम.। २ श्री कमलायै नम.। ३ श्री लक्ष्म्यै नमः। ४ श्री चलायै नमः। ५ श्री भूत्यै नम.। ६ श्री हरिप्रियायै नम ।७ श्री पद्मायै नमः ८ श्री पद्मालयायै नमः। ९ श्रीसंपदे नम । १० श्रीऊर्ध्वगत्यै नम । ११ श्रीश्रियै नमः ।१२ श्री पद्मधारिण्यै नमः।

॥ अथ षोडश युग्म पूजा ॥ प्रत्येक नाम्ना नम इत्यनंतरं कुंकुमाक्तक्षतैः पूजयेत् ॥

| | | | | | |
|---|---|---|---|---|---|
| ॐ | श्रीं | क्लीं | अं | श्री-केशवाभ्यां | नमः । |
| ,, | ,, | ,, | आं | लक्ष्मी-नारायणाभ्यां | नमः । |
| ,, | ,, | ,, | इं | कमला-माधवाभ्यां | नमः । |
| ,, | ,, | ,, | ईं | पद्मा-गोविंदाभ्यां | नमः । |
| ,, | ,, | ,, | उं | पद्मिनी-विष्णुभ्यां | नमः । |
| ,, | ,, | ,, | ऊं | कमलालया-मधुसूदनाभ्यां | नमः । |
| ,, | ,, | ,, | ऋं | रमा-त्रिविक्रमाभ्यां | नमः । |
| ,, | ,, | ,, | ॠं | वृषाकपि-वामनाभ्यां | नमः । |
| ,, | ,, | ,, | लृं | धन्या-श्रीधराभ्यां | नमः । |
| ,, | ,, | ,, | ॡं | पृथ्वी-हृषीकेशाभ्यां | नमः । |
| ,, | ,, | ,, | एं | यज्ञा-पद्मनाभाभ्यां | नमः । |
| ,, | ,, | ,, | ऐं | इंदिरा-दामोदराभ्यां | नमः । |
| ,, | ,, | ,, | ओं | उषा-अनिरुद्धाभ्यां | नमः । |
| ,, | ,, | ,, | औं | माया-पुरुषाभ्यां | नमः । |
| ,, | ,, | ,, | अं | गिरा-संकर्षणाभ्यां | नमः । |
| ,, | ,, | ,, | अः | राधा-वासुदेवाभ्यां | नमः । |

अथ श्रीसूक्तेन होमः ॥

ततः सगोघृतैर्बिल्वखंडैर्वा षोडशाहुतीर्हुत्वा संपूर्णस्तोत्रपाठं च कृत्वा यथाशक्ति मूलमंत्रं जपेत् ॥ होमे प्रतिमंत्रांतं स्वाहाकारं वदेत् ॥

ॐ ऐं ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह स्वाहा ॥१॥

ॐ ऐं ॐ ह्रीं ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् स्वाहा ॥२॥

ॐ ह्रीं ॐ श्रीं ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ॥
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् स्वाहा ॥३॥

ॐ श्रीं ॐ क्लीं ॥ कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलन्तीं ॥
तृप्तां तर्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये
श्रियम् स्वाहा ॥४॥

ॐ क्लीं ॐ वदवद ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं
लोके देवजुष्टामुदाराम् ॥ तां पद्मिनीमीं शरणमहं प्रपद्ये
अलक्ष्मीर्मे नश्यतां त्वां वृणे स्वाहा ॥५॥

ॐ वदवद ॐ वाग्वादिनी ॥ आदित्य वर्णे तपसोऽधिजातो वन-
स्पतिस्तव वृक्षोऽथ बिल्वः॥तस्य फलानि तपसा नुदन्तु मा
यान्तरा याश्च बाह्या अलक्ष्मीः स्वाहा ॥६॥

ॐ वाग्वादिनी ॐ ऐं ॥ उपैतु मां देवसखः कीर्तिश्च
मणिना सह ॥ प्रादुर्भूतः सुराष्ट्रेऽस्मिन् कीर्तिमृद्धिं
ददातु मे स्वाहा ॥७॥

ॐ ऐं ॐ सौः ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशया-
म्यहम् ॥ अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात् स्वाहा ॥८॥

ॐ सोः ॐ हंसः ॥ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् स्वाहा ॥९॥
ॐ हंसः ॐ आं ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः स्वाहा ॥१०॥
ॐ आं ॐ ह्रीं ॥ कर्दमेन प्रजा भूता मयि संभव कर्दम ॥
श्रियं वासय मे कुले मातरं पद्ममालिनीम् स्वाहा ॥११॥
ॐ ह्रीं ॐ क्रीं ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ॥
वाचंदेवीं मातरं श्रियं वासय मे कुले स्वाहा ॥१२॥
ॐ क्रीं ॐ क्लीं ॥ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ॥
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह स्वाहा ॥१३॥
ॐ क्लीं ॐ श्रीं ॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ॥
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह स्वाहा ॥१४॥
ॐ श्रीं ॐ हूं तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्
स्वाहा ॥१५॥
ॐ हूं ॐ स्वाहा ॐ हूं ॐ ऐं ॥ यः शुचिः प्रयतो भूत्वा जुहुयादा-
ज्यमन्वहम् ॥ श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् स्वाहा ॥१६॥

---

सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे ॥
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥१॥
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ॥
धनमिन्द्रो बृहस्पतिर्वरुणो धनमश्विना ॥२॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ॥
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥३॥
न क्रोधो न च मात्सर्यं न लोभो नाऽशुभा मतिः ॥
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥४॥

पद्मानने पद्मिनि पद्महस्ते पद्मप्रिये पद्मदलायताक्षि ॥
विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥५॥
आनंदः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः ॥
ऋषयस्ते त्रयः पुत्राः स्वयं श्रीरेव देवता ॥६॥

ओं महालक्ष्मीं च विद्महे विष्णुपत्नीं च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥७॥

॥ इति मूल मंत्रः– श्री गायत्री च ॥

ऋणरोगादि दारिद्र्यं पापं च अपमृत्यवः ॥
भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥८॥
श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ॥
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥९॥
अश्वदायै च गोदायै धनदायै महाधने ॥
धनं मे जुषतां देवि सर्वकामार्थसिद्धये ॥१०॥
पुत्रपौत्रधनं धान्यं हस्त्यश्वादिगवेरथम् ॥
प्रजानां भवसि माता आयुष्मन्तं करोतु माम् ॥११॥
चन्द्राभां लक्ष्मीमीशानां सूर्याभां श्रियमीश्वरीम् ॥
चन्द्रसूर्याग्निवर्णाभां महालक्ष्मीमुपास्महे ॥१२॥
वर्षन्तु ते विभावरी दिवो अभ्रस्य विद्युतः ॥
रोहन्तु सर्वबीजान्यव ब्रह्मद्विषो जहि ॥१३॥
या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी
गंभीरावर्तनाभिः स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ॥
लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुंभै-
र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥१४॥
वरांकुशापाशमभीतिमुद्रां करैर्वहन्तीं कमलासनस्थाम् ॥
बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां जगदीश्वरीं ताम् ॥१५॥
ज्ञानमात्मनि भा सूर्ये चन्द्रे ज्योत्स्ना च खे ध्वनिः ॥
वर्णो हिरण्ये पयसि घृतं त्वमसि मातृके ॥१६॥
हिरण्यवर्णां मणिनूपुराढ्यां प्रसन्नवक्त्रां शुकपद्महस्ताम् ॥
विशाल नेत्रां प्रणमामि गौरीं वाग्देविद वाचमुदीरयन्तीम् ॥१७॥

हिरण्यरेतमः शंभोः शक्तिः प्रोक्ता हिरण्मयी ॥
धनार्थिभिरुपास्येयं जातवेदगिर सर्वदा ॥१८॥
ललिता शारदा लक्ष्मीरेकैव भगवत्युमा ॥
समस्तलक्षणसंयुक्ता पुरुषार्थप्रदा नृणाम् ॥१९॥
हिरण्यं विष्णुराख्यानरस्य वर्णस्तु वैष्णवी ॥
पिशंगधवलामिश्र स्रग्भिरम्लानपंकजैः ॥२०॥
चतुरंगबलोपेतां धनधान्यसुखेश्वरीम् ॥
अश्वारूढामहं वन्दे राजलक्ष्मीं हिरण्मयीम् ॥२१॥
वरदाभयशुकपुस्तककरकलितां कमलमध्यगां कलये ॥
कमलां सस्मितवदनां कनकाचरणस्थितां कांचित् ॥२२॥
आकाशपद्माकरचन्द्रबिम्ब प्लवोल्लसन्तीं परिपूर्णकान्तिम् ॥
पद्मस्थितां पद्मकरां प्रपद्ये लक्ष्मीमलक्ष्मीविनिवृत्तयेऽहम् ॥२३॥
उद्यदादित्यसंकाशां बिल्वकाननमध्यगाम् ॥
तनुमध्यां श्रियं ध्याये अलक्ष्मीपरिहारिणीम् ॥२४॥
कीर्तिर्मतिर्द्युतिः पुष्टिः समृद्धिस्तुष्टिरेव च ॥
श्रुतिः स्मृतिर्बलं मेधा श्रद्धारोग्यजयादिकाः ॥२५॥
देवताः शक्तयः सर्वास्तस्तद्देवांशगा नृप ॥
महालक्ष्मीमुपासन्ते तस्या किंकर्य एव ताः ॥२६॥
अज्ञानपातस्समस्ततितीवरदिमं दौर्भाग्यभूधरविदारणवज्रमीडे ॥
रोगातिघोरफणिमर्दनपक्षिराजं लक्ष्मीपदद्वयमनर्थहरं सुखार्थी ॥२७
खड्गं सपाशचक्रं च कमलं वरमेव च ॥
करैश्चतुर्भिर्बिभ्राणां ध्याये चंद्राननां श्रियम् ॥२८॥
राजराजेश्वरीं लक्ष्मीं वरदां मणिमालिनीम् ॥
देवीं देवप्रियां कीर्तिं वन्दे काम्यार्थसिद्धिदाम् ॥२९॥
ध्याये लक्ष्मीं प्रहसितमुखीं राजसिंहासनस्थां
मुद्राशक्ति सकलविनुतां सर्वसंसेव्यमानाम् ॥
अग्नौ पूज्यामखिलजननीं हेमवर्णां हिरण्यां
भाग्योपेतां भुवनसुखदां भार्गवीं भूतधात्रीम् ॥३०॥
सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्जयलक्ष्मीः सरस्वती ।
श्रीलक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना मम सर्वदा ॥३१॥

सर्वमंगलमांगल्ये शिवे सर्वार्थसाधिके ॥
शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥१२॥
लक्ष्मीं क्षीरसमुद्रराजतनयां श्रीरंगधामेश्वरीं
दासीभूतसमस्तदेववनितां त्रैलोक्यदीपांकुराम् ॥
श्रीमन्मंदकटाक्षलब्धविभवब्रह्मेन्द्रगंगाधरां
त्वां त्रैलोक्यकुटुंबिनीं सरसिजां वन्दे मुकुन्दप्रियाम् ॥१३॥
देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ॥
प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥१४॥
दुर्गे स्मृता हरसि भीतिमशेषजंतोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥
दारिद्र्य दुःख भयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥१५॥

---

## अथ श्रीसूक्त पुरश्चरण विधिः ॥

### ॥ श्री सूक्तस्य यंत्रम् ॥

अस्य यंत्रस्य चित्रं अस्मिन्नेव पुस्तकेऽन्यत्रास्ति ।

बिन्दुं त्रिकोणं ष्ट्कोणं ततो वृत्तं प्रकल्पयेत् ॥
तद्बाह्येष्टदलं प्रोक्तं ततो वृत्तं प्रकल्पयेत् ॥१॥
तद्बाह्ये षोडशदलं ततश्च भूपुरं स्मृतं ॥
चतुर्द्वारयुतं चैव त्रिरेखाभिरलंकृतं ॥२॥
श्रीबीजं बिन्दुमध्ये च साध्यनाम तथा लिखेत्
ऐं क्लीं सौः स्यात् त्रिकोणे च शक्तित्रिकं च तद्बहिः ॥३॥
मुख्यां अंकुशशक्तिं च बाणशक्तिं ततः परां ॥
पाशशक्तिं च विन्यस्य ततः षट्कोण यंत्रके
हृदयादि षडंगानां बीजानि श्रीस्वरैर्न्यसेत् ॥४॥
हिरण्यवर्णां विन्यस्य श्रां नमो हृदयाय च ॥
हरिणीं श्रीं च विन्यस्य, स्वाहा च शिरसि न्यसेत् ॥५॥
श्रूं शिखायै वषट् तत्र सुवर्णरजतस्रजां ॥
श्रैं हूं च कवचायैव चन्द्रां तत्र च विन्यसेत् ॥६॥

वौषद् नेत्रत्रयाय औं तत्र देवीं हिरण्मयीं ॥
अस्त्राय फडिति श्च लक्ष्मीं विष्णुवधूं न्यसेत् ॥७॥
षट्कोण बाह्य स्थानेषु सर्वानंदमयीं तथा ॥
सर्वपापहरीं चैव सर्वदुःखविमोचिनीं ॥८॥
सर्वज्ञानमयीं सर्वैश्वर्यप्रदां शुभंकरीं ॥
न्यसेत् पद्मां बुधस्तत्र सर्वेप्सितफलप्रदां ॥९॥
ततो वृत्तं ततो बाह्ये न्यसेदष्टदले बुधः ॥
काद्यष्टवर्गास्तत्रैव प्रतिवर्गेण विन्यसेत् ॥१०॥
अनंगकुसुमां चैव तथा चानंगमेखलां ॥
अनंगमदनां चैव अनंगमदनातुरां ॥११॥
अनंगरेखां विन्यस्य अनंगवेगिनीं तथा ॥
तथानंगांकुशामन्ते हे ळे क्षेऽनंगमालिनीं ॥१२॥
तत्रश्चाष्टदलाद् बाह्ये सूर्यादींश्च ग्रहान्न्यसेत् ॥
तत्रच भूर्भुवः स्वश्च महर्जन तपस्तथा ॥१३॥
सत्यलोकं ब्रह्मलोकं ततो वृत्तं विधाय च ॥
वृत्तोर्ध्वे षोडशदलं तत्र स्युः षोडशस्वराः ॥१४॥
तत्रषोडशदेवीश्च अं श्रियं चेति वै क्रमात् ॥
लक्ष्मीं च कमलां पद्मां पद्मिनीं कमलालयां ॥१५॥
रमां वृषाकपिं धन्यां पृथ्वीं यज्ञां तथेन्दिरां ॥
उमां मायां गिरां राधां षोडशीमिति विन्यसेत् ॥१६॥
द्वारपालान् चतुर्दिक्षु पूर्वे दमनकं न्यसेत् ॥
कुरंटकं दक्षिणे च सलिलं पश्चिमे न्यसेत् ॥१७॥
गुग्गुलुं चोत्तरे न्यस्य सबीजान् सर्वतस्तथा ॥
पूर्वे चेन्द्रं वज्रमरावतं शास्त्रप्रियां तथा ॥१८॥
दक्षिणे च यमं दंडं महिषं वामनं तथा ॥
तां पुराणप्रियां देवीं तत्रच दक्षिणे न्यसेत् ॥१९॥
पश्चिमे वरुणं पाशं मकरं च तथांजनं ॥
देवीं रत्नप्रियां न्यस्य रत्नाद्याभरणप्रदां ॥२०॥

उत्तरे च न्यसेद् देवं कुबेरं तस्य च गदां ॥
नरयानं सार्वभौमं देवीं कर्मप्रियां तथा ॥२१॥
ईशाने च तथेशानं वाहनं वृषभं शुभं ॥
त्रिशूलं सुप्रतीकं च देवीं चैवामृतप्रियां ॥२२॥
अधश्चाग्निं तथा शक्तिं मेषं पुंडरिकं न्यसेत् ॥
स्मृतिप्रियां, नैर्ऋतिं च खड्गं प्रेतं तथा न्यसेत् ॥२३॥
कुमुदं च तथा न्यस्य इतिहासप्रियां तथा ॥
वायव्य दिशि वायुं च अंकुशं वाहनं मृगं ॥
पुष्पदंतं न्यसेच्चैव धर्मप्रियां च सानुगां ॥२४॥
ईशान पूर्वयोर्मध्ये ब्रह्माणं सकमंडलुं ॥
ऊर्ध्वे सपद्मं चैवाजां वेदप्रियां च सानुगां ॥२५॥
भूपुरस्य त्रिरेखासु ब्रह्मविष्णु महेश्वरान् ॥
सवाहनान् सायुधांश्च आवाह्य सपरिच्छदान ॥२६॥
आवाहयेदधोऽनंतं सचक्रं गरुडासनम् ॥
परिवारयुतां सत्यप्रियामावाहयामि वा ॥२७॥

पूजने पीठपूजायां आधारशक्त्यादि पीठशक्त्यंतं विभूत्यादिकाः ॥ विभूतिः । उन्नतिः । कांतिः । हृष्टिः । कीर्तिः । सन्नतिः व्युष्टिः । उत्कृष्टिः । ऋद्धिः ।

तत्र शुभे मासि शुक्लप्रतिपदमारभ्यैकादशी पर्यंतम् । द्वादश सहस्रं जपः । द्वादश्यां १२ शतं होमः । तद्यथा ३०० आहुतयः कमलानां । ३०० आहुतयः बिल्वसमिधां । ३०० पायसस्य त्रिमध्वक्तस्य । ३०० आज्यस्य । श्री सूक्तस्य १२० तर्पणं । १२ मार्जनं । १२ ब्राह्मण भोजनं । एवं आहुः श्रीमच्छंकराचार्यपादाः ।

गौडपादाचार्यास्तु । शुक्लप्रतिपदमारभ्य शुक्लाष्टमीपर्यंतं प्रत्यहं ७५ कृत्वा श्रीसूक्त जपः । नवमी दशम्योस्तु ६७। एकादश्यां ६६। द्वादश्यां होम ८०

॥ पुरश्चरणं ॥

जपात्मकं । होमात्मकं । तर्पणात्मकं । मार्जनात्मकं । अभिषेकात्मकं । ब्राह्मणभोजनात्मकं । पूजनात्मकं । पुष्पसमर्पणात्मकं । स्तुतिपाठात्मकं । फलनिवेदनात्मकं । पत्रसमर्चनात्मकं । धान्यसमर्चनात्मक वापि भवति ।

इति पुरश्चरणं

## ॥ श्रीसूक्त होम प्रयोगः ॥

आचम्य प्राणानायम्य संकल्प्य । मम गृहे पंचसूना जनितदोषपरिहार-पूर्वकं दशविधलक्ष्मी प्राप्त्यर्थं प्राप्तलक्ष्मीस्थिरीकरणार्थमलक्ष्मीनाशनार्थं शाकलतंत्रोक्त पंचमहा यज्ञसमवेतं पुरुषसूक्त श्रीसूक्त होममन्त्रुपस्थानं पुरुषसूक्तपूर्वकश्रीसूक्तजपः । आयुष्करणं समापनं विसर्जन कर्मार्पणं च करिष्ये ।

(१) पंचभू संस्काराः । १ परिसमूहनम् २ उपलेपनम् ३ उल्लेखनम् ४ उद्धरणम् ५ अभ्युक्षणम् ।

(२) अग्न्याहरणम् । अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनुसूर्यस्य पुरुत्राच रश्मीन् द्यावापृथिवी ऽ आततन्थ ।

(३) प्रतिष्ठापनम् । पृष्टोदिवि पृष्टोअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीरा-विवेश । वैश्वानरः सहसा पृष्टो अग्निः सनो दिवासरिषस्पातु नक्तम् ।

(४) उपस्थानम् । (१) समितिर संकल्पेथाः सम्प्रियौ रोचिष्णू सुमनस्यमानौ इषमूर्जमभिसंवसानौ ।

(२) संवा मनाँसि संव्रता समुचित्तान्याकरम् । अग्नेपुरीष्याधिपाम भवत्वंन ईषमूर्जं यजमानाय धेहि ।

(५) समिन्धम् । १ ॐ भूर्भुवः स्वः । २ ताः सवितुर्वरेण्यस्य चित्रामहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत् प्रपीनाः सहस्रधारां पयसा महीं गाम् । ३ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ४ विश्वानि देव सवितर्दुरितानि परासुव यद्भद्रं तन्न आसुव ।

(६) पुनः संधानाहुतिः । मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोतु अरिष्टं यज्ञः समिमं दधातु । विश्वेदेवास इहमादयन्ता मो ३ म्प्रतिष्ठ ॥

(७) अग्निस्थापनम् । अग्निं प्रणमामि मनसा शिवेनायमस्तु संगमनो वसूनां मनोहारि सीः स्थविरं शाकुमारं शंनोभव द्विपदे शं चतुष्पदे ।

(८) ध्यानम् । चत्वारि शृंगा त्रयो यस्य पादा द्वेशीर्षे सप्तहस्तासो अस्य । त्रिधाबद्धो वृषभो रोरवीति महादेवो मर्त्यां ऽ आविवेश ।

(९) पूजनम् । नाम्ने ... नराय इदमन चंदनं च पुष्प पात्रासादनादि

(१०) पर्युक्षणं ।

(११) पूर्वांगहोमः । संराधनीय होमः । यावनोदेवास्त्वयि जातवेदास्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् । तेभ्योऽहं भागधेयं जुहोमि तेमा तृप्ताः सर्वैः कामैः समर्थयन्तु स्वाहा । यातिरश्ची निपद्यतेऽहं विधरणी इति । तां त्वा घृतस्य धारया यजेसं॰ राधनीमहं॰ स्वाहा ।
आघारौ आज्यभागौ हुत्वा नवाहुतिहोमं च कृत्वा ।

(१२) वैश्वदेव होमः ।

(१) व्याहृति होमः ।

१ भूः स्वाहा । २ भुवः स्वाहा । ३ स्वः स्वाहा । ४ भूर्भुवः स्वः स्वाहा ।

(२) शामक होमः ।

१ देवकृतस्यैनसो वयजनमसि स्वाहा ।
२ मनुष्यकृतस्यैनसो वयजनमसि स्वाहा ।
३ पितृकृतस्यैनसो वयजनमसि स्वाहा ।
४ आत्मकृतस्यैनसो वयजनमसि स्वाहा ।
५ एनस एनसो वयजनमसि स्वाहा ।
६ यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसो वयजनमसि स्वाहा ।
७ प्रजापतये स्वाहा ।

(३) स्मार्त होमः ।

१ गणानान्त्वा गणपतिं॰ हवामहे प्रियाणां त्वा प्रियपतिं॰ हवामहे निधीनां त्वा निधिपतिं॰ हवामहे वसोमम । आहमजानिगर्भधमा-त्वमजासिगर्भधम् । इति मंत्रेण नवस आहुतयः ।
२ ॐत्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम् उर्वारुकमिव बंधनान् मृत्योर्मुक्षीय मामृतात् । त्र्यंबकं यजामहे सुगंधिं पतिवेदनम् । उर्वारुकमिव बंधनादितो मुक्षीय मामृतात् । इति मंत्रेण आहुती द्वे ।

(१३) प्रधान होमः ।

१ पुरुष सूक्तम् ।
श्रीसूक्तम् । यथेदेशं । हिरण्यवर्णा इति मंत्रेण १०८ अन्नेन जुहुयात् ।
. अंगपूजा आवरणानि वा कांसोस्मितां इति मंत्रेण ११ आज्येन जुहुयात

१४ रुद्रः पशूनामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ९ स्वाहा ।

१५ त्वष्टा रूपाणामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ९ स्वाहा ।

१६ विष्णुः पर्वतानामधिपतिः समावत्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्यां ९ स्वाहा ।

१७ मरुतो गणानामधिपतयस्ते समावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ९ स्वाहा ।

१८ पितरः पितामहाः परेवरेततास्ततामहा इहमावन्त्वस्मिन् ब्रह्मण्यस्मिन् क्षत्रेस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या ९ स्वाहा ।

(४) वातहोमः ।

१ समुद्रोसि नभस्वानार्द्रदानुः शंभूर्मयोभूरभिमावाहि स्वाहा ।

२ मारुतोसि मरुतांगणः शंभूर्मयोभूरभिमावाहि स्वाहा ।

३ अवस्यूरसि दुवस्वान् शंभूर्मयोभूरभिमावाहि स्वाहा ।

(५) रुक्मती होमः ।

१ यास्ते अग्ने सूर्येरुचो दिवमातन्वति रश्मिभिः ताभिर्नो अद्य सर्वाभी रुचे जनाय नस्कृधि ।

२ यावोदेवाः सूर्येरुचो गोष्वश्वेषु यारुचः । इंद्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ।

३ रुचंनोधेहि ब्रह्मणेपुरप ९ राजसुनस्कृधि । रुच विश्येपु शूद्रेपु मयि धेहि रुचारुचम् ।

४ स्वर्णधर्मः स्वाहा । ५ स्वर्णार्कः स्वाहा । ६ स्वर्णशुक्रः स्वाहा । ७ स्वर्णज्योतिः स्वाहा । ८ स्वर्णसूर्यः स्वाहा । ९ तत्वायामि ब्रह्मणा वंदमानस्तदाशास्ते यजमानो हविर्भिः । अहेडमानो वरुणेहबोध्युरुश ९ समानऽआयुः प्रमोषीः ।

(६) वैमृधहोमः ।

१ वार्त्रहत्याय शवसे पृतनाषाह्याय च । इन्द्रत्वा वर्तयामसि ।

२ सहदानुं पुरुहूतक्षियन्तमहस्तमिन्द्र सम्पिणक्कुणारुम् । अभिवृत्रं वर्धमानं पियारुमपादमिन्द्र तव सा जघन्थ ।

३ विन इन्द्रमृधो जहिनीचायच्छ पृतन्यतः । यो ऽस्माँऽअभिदासत्य-
धरंगमया तमः ।

४ मृगोनभीमः कुचरोगिरिष्ठाः परावतऽआजगन्था परस्याः । सृक ५
स ५ शाय पविमिंद्र तिग्मं विशत्रून् ताड्ढीविमृधोनुदस्व ।

५ वैश्वानरो न ऊतय आमयातुपरावतः । अग्निरुक्थेन वाहसा । उपयाम
गृहीतोसि वैश्वानराय स्वेष ते योनिर्वैश्वानराय त्वा ।

६ पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ।
वैश्वानरः सहसा पृष्टो अग्निः सनो दिवासरिषस्पातु नक्तम् ।

७ अश्यामत काममग्ने तवोती अश्यामरयि ५ रयिवः सुवीरम् । अश्याम
वाजमभिवाजयन्तो श्यामद् द्युम्नमजराजरंते ।

८ कर्मसंपूरकाहूतिः । तद्विष्णोः परमम्पद ५ सदा पश्यन्ति सूरयः ।
दिवीवचक्षुराततम् ।

९ कर्म शेषाहूतिः । अग्नये स्विष्टकृते स्वाहा ।

(१५) उत्तरांग होमः ।

(१) भूः स्वाहा । २ भुवः स्वाहा । ३ स्वः स्वाहा । ४ भूर्भुवः स्व स्वाहा ।
५ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषाे५ सि प्रमुमुग्ध्यस्मत् ।

६ सत्वन्नो अग्नेवयो भवोती नेदिष्ठो अस्याउपसोव्युष्टौ । अवयक्ष्वनो
वरुण ५ रराणो वीहिमृडीक ५ सुहवो न एधि ।

७ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वया असि । अयान्ये यज्ञं
वहास्ययानो धेहि भेषजम् ।

८ येते शत वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो
अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः ।

९ उदुत्तम वरुणपाशमस्मदवाधमं विमध्यम ५ श्रथाय । अथावयमादित्यव्रते
तवानागसो अदित्ये स्याम ।

(२) कामपूरकाहुतिः ।

१ प्रजापतेनत्वदेतान्यन्यो विश्वारूपाणि परिता बभूव । यत्कामास्ते
जुहुमस्तन्नो अस्तु । वय ५ स्याम पतयोरयीणाम् (पूर्णाहुतेः पूर्वं
वा बहिहरणम् ) ।

(३) पूर्णाहुतिः ।

१ सप्तते अग्ने समिधः सप्तजिह्वाः सप्तऋषयः सप्तधामप्रियाणि । सप्तहोत्राः सप्तधात्वा यजन्ति सप्तयोनीरापृणस्व घृतेन स्वाहा ।

२ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आजातमग्निम् । कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः । श्रीसूक्तं पुरुषसूक्तं च ।

(४) वसोर्धारा ।

१ शुक्रज्योतिश्चेत्यादि मंत्राः । ॥ यजुः अ १७ मं ८० ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः घृतेन त्वंतन्वंवर्धस्व सत्याः सन्तु यजमानस्य कामाः ।

(५) बलिहरणम् ।

१ वैश्वदेवांगभूत बलिहरणम् ।

१ धात्रे नमः २ विधात्रे नमः ३ विश्वेभ्यो देवेभ्यो नमः ।

२ श्रीसूक्ताराधनांग भूतं बलिहरणम् ।

१ श्रीं श्रियै नमः । २ श्रीं लक्ष्म्यै नमः । ३ श्रीं वरदायै नमः । ४ श्रीं विष्णुपत्न्यै नमः । ५ श्रीं वसुप्रदायै नमः । ६ श्रीं हिरण्यरूपायै नमः । ७ श्रीं स्वर्णमालिन्यै नमः । ८ श्रीं रजतस्रजायै नमः । ९ श्रीं सुवर्ण गृहायै नमः । १० श्रीं सुवर्ण प्राकारायै नमः । ११ श्रीं पद्मवासिन्यै नमः । १२ श्रीं पद्महस्तायै नमः । १३ श्रीं पद्मप्रियायै नमः । १४ श्रीं मुक्तालंकारायै नमः । १५ श्रीं सूर्यायै नमः । १६ श्रीं चंद्रायै नमः । १७ श्रीं बिल्वप्रियायै नमः । १८ श्रीं ईश्वर्यै नमः । १९ श्रीं भुक्त्यै नमः । २० श्रीं प्रभुक्त्यै नमः । २१ श्रीं विभूत्यै नमः । २२ ऋद्ध्यै नमः । २३ श्रीं समृद्ध्यै नमः । २४ श्रीं तुष्ट्यै नमः । २५ श्रीं पुष्ट्यै नमः । २६ श्रीं धनदायै नमः । २७ श्रीं धनेश्वर्यै नमः । २८ श्रीं श्रद्धायै नमः । २९ श्रीं सभोगिन्यै नमः । ३० श्रीं भोगदायै नमः । ३१ श्रीं धात्र्यै नमः । ३२ श्रीं विधात्र्यै नमः

श्रिय आराधनांगभूतद्वारपालबलिः

१ श्रीं दमकाय नमः । २ श्रीं सलिलाय नमः । ३ श्रीं गुग्गुलवे नमः । ४ श्रीं कुरंटकाय नमः ।

वैश्वदेवशेषः

१ सर्वेभ्यो भूतेभ्यो नमः । २ भूतानां च पतये नमः । ३ सनकादि मनुष्येभ्यो हंत । ४ पितृभ्यः स्वधा । ५ यक्ष्मैतत्ते निर्णेजनम् । ६ गोभ्यो नमः । ७ श्वभ्यो नमः । ८ दासेभ्यो नमः । ९ पिपीलिकादिभ्यो नमः । १० अतिथये नमः ।

उपस्थानम् ।

श्रीसूक्तपुरुषसूक्ताभ्याम् । उपस्थानं वेदमंत्रैश्च ।

१ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ।

२ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां

दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरंधिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

३ मह्यान्यग्ने हविरास्येतेत्संधीय घृतं चम्वीव सोमः। वाजसनि २ रयिमस्मेसुवीरं प्रशस्तं धेही यशसं बृहन्तम् ॥

४ अग्निर्देवता वातो देवता सूर्यो देवता चंद्रमा देवता वसवो देवता रुद्रा देवता आदित्या देवता मरुतो देवता विश्वेदेवा देवता बृहस्पतिर्देवता इंद्रो देवता वरुणो देवता ॥

५ इदं हविः प्रजननं मे अस्तु दशवीर २ सर्वगण २ स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयोरेतो अस्मासुधत्त ॥

६ विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रं तन्न आसुव ॥

जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः॥

७ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठांते नमउक्तिं विधेम स्वाहा ॥

८ सहनाववतु सहनौ भुनक्तु सहवीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

९ यार्त्रेशस्याय शवसे० । १० यच्छन्तु पुरुहुतः० । ११ विनइंद्र० । १२ मृगोनभीम० । १३ वैश्वानरोन० । १४ पृष्टोदिवि० । १५ अश्यामतं० ॥

१६ यर्यंते अचरिमाहिकामसुत्तानहस्तानमसोपसद्य। यजिष्ठेन मनसा यक्षि देवानस्रेधता मन्मना विप्रो अग्ने ॥

१७ धामच्छदग्निरिंद्रो ब्रह्मा देवो बृहस्पतिः। सचेतसो विश्वेदेवा यज्ञं प्रावन्तु नः शुभे ॥

त्वं यविष्ठदाशुषो नॄँ पाहि शृणुधीगिरः। रक्षातोकमुततमना ॥

१८ सप्तते अग्ने समिधः सप्तजिह्वाः सप्तऋषयः सप्तधामप्रियाणि। सप्तहोत्राः सप्तधा त्वा यजन्ति सप्तयोनीराप्टणस्व घृतेन स्वाहा ॥

१९ शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च। शुक्रश्च ऋतपाश्चात्य २ हाः ॥

ईदृङ्चान्यादृङ् च सदृङ् च प्रतिसदृङ् च। मितश्च संमितश्च सभराः ॥

२० ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धर्ता च विधर्ता च विधारयः ॥

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च। अन्तिमित्रश्च दूरे अमित्रश्च गणः ॥

२१ ईदृक्षास एतादृक्षास ऊषुणः सदृक्षासः प्रतिसदृक्षास एतन। मितासश्च संमितासोनो अद्य सभरसो मरुतो यज्ञे अस्मिन् ॥

२२ स्वतवांश्च प्रघासी च सान्तपनश्च गृहमेधी च। क्रीडी च शाकी चोज्जेषी ॥

२३ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च। सासह्वांश्चाभियुग्वा च विक्षिपः स्वाहा ॥

२४ इंद्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्। एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥ पुनरप्यादित्या० यजुः अ० १२-४४ ॥

## ॥ वाजश्चमे इत्यादि मंत्राः ॥

## ॥ ततो जपः । पुरुषसूक्तस्य श्रीसूक्तस्य च ॥

त्र्यायुषं जमदग्नेः। कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ कनापन्नः। स्वरेण वर्णेन च महितेन हवेन होवं अश्नासी चय ॥ तदस्तु पग्ने धीरपूजितं तव प्रचरणमुत्तमुरु समस्त। तत्सत्यमिति प्रदक्षिणं।

## ॥ स्तोत्रपाठः ॥

### ॥ अग्निविसर्जनम् ॥

१ यज्ञयज्ञं गच्छ यज्ञपतिं गच्छ स्वांयोनिं गच्छ स्वाहा । एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तञ्जुषस्व स्वाहा ॥

२ देवागातु विदोगातुं वित्वा गातुमित । मनसस्पत इमं देव यज्ञ ँ स्वाहा वातो धा. ।

३ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथा । तं जानन्नग्न आरोहाथानो वर्धया रयिम् ।

४ नमो महद्भ्यो० । ५ नमो ब्रह्मणे० । ६ तच्छंयोराहृणीमहे० ।

७ गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर । यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ।

॥ ततः कर्मार्पणम् ॥

## ॥ इति होमविधिः ॥



## ॥ अथ विष्णु स्तवः ॥

प्रसीद भगवन्मह्यमज्ञानाकुंठितात्मने ॥
तवांघ्रिपंकजरजो रागिणीं भक्तिमुत्तमाम् ॥१॥
अज प्रसीद भगवन्नमितद्युतिपंजर ॥
अप्रमेय प्रसीदास्मद्दुःखहन्पुरुषोत्तम ॥२॥
स्वसंवेद्यस्वरूपात्मन्नानंदात्मन्ननाम च ॥
अचिन्त्यसार विश्वात्मन् प्रसीदेश निरंजन ॥३॥
प्रसीद तुंग तुंगानां प्रसीद शिव शोभन ॥
प्रसीद स्पष्ट गंभीर गंभीराणां महाद्युते ॥४॥
प्रसीद व्यक्त विस्तीर्ण विस्तीर्णानामगोचरः ॥
प्रसीदार्द्रार्द्रजातीनां प्रसीदात्यंतपापिनाम् ॥५॥
गुरोर्गरीय. सर्वेश प्रसीदानन्यदेहिनाम् ॥
जय माधव मायात्मन् जय केशव केशिहन् ॥६॥
जय सुंदर सौम्यात्मन् जय शाश्वतशंखभृत् ॥
जय शार्ङ्गधर श्रीमन् जय नंदकनंदन ॥७॥
जय चक्रगदापाणे जयाजय्य जनार्दन ॥
जय रत्नोत्करापद्धकिरीटाक्रांतमस्तक ॥८॥
जय पक्षिपतिच्छायानिरुद्धार्ककराकर ॥
नमस्ते नरकाराते नमस्ते मधुसूदन ॥९॥

नमस्ते नलिनापांग नमस्ते नयनांजन ॥
नमः पापहरेशान नमः सर्वभयापह ॥१०॥
नमः संहृतसर्वात्मन्नमः संभृतकौस्तुभ ॥
नमो विभिन्नज्ञेयांश नमः स्मृतिपथातिग ॥११॥
नमस्त्रिमूर्तिभेदेन सर्गस्थित्यंतहेतवे ॥
विष्णवे त्रिदशारातिजिष्णवे परमात्मने ॥१२॥
चक्रभिन्नारिचक्राय चक्रिणे चक्रबंधवे ॥
विश्वाय विश्ववंद्याय विश्वभूतात्मने नमः ॥१३॥
नमोस्तु योगिध्येयाय नमोस्त्वध्यात्मरूपिणे ॥
भक्तिप्रदाय भक्तानां नमस्ते मुक्तिदायिने ॥१४॥
मनोवाक्कायचेष्टाः स्युर्ध्यानस्तुतिनमस्क्रियाः ॥
देवेश कर्म सर्वं मे भवेदाराधनं तव ॥१५॥



## ॥ अथ कनकधारा स्तवः ॥

अंगं हरेः पुलकभूषणमाश्रयंती
भृंगांगनेव मुकुलाभरणं तमालम् ॥
अंगीकृताखिलविभूतिरपांगलीला
मांगल्यदास्तु मम मंगलदेवतायाः ॥१॥
मुग्धा मुहुर्विदधती वदने मुरारेः
प्रेमत्रपाप्रणिहितानि गतागतानि ॥
मालादृशोर्मधुकरीव महोत्पले या
सा मे श्रियं दिशतु सागरसम्भवायाः ॥२॥
विश्वामरेन्द्र पदविभ्रमदानदक्ष-
मानन्द हेतुरधिकं पुरविद्विषोपि ॥
ईषन्निषीदतु मयि क्षणमीक्षणार्ध-
मिन्दीवरोदरसहोदरमिन्दिरायाः ॥३॥
आमीलिताक्षमधिगम्य मुदा मुकुंदं
आनंदकंदमनिमेषमनंगतंत्रम् ॥

आकेकरस्थितकनीनिकपक्ष्मनेत्रं
भूत्यै भवेन्मम भुजंगशयांगनायाः ॥४॥
बाह्वंतरे मधुजितः श्रितकौस्तुभे या
हारावलीव हरिनीलमयी विभाति ।
कामप्रदो भगवतोपि कटाक्षमाला
कल्याणमावहतु मे कमलालयायाः ॥५॥
कालाम्बुदालिललितोरसि कैटभारे-
र्धाराधरे स्फुरति या तडिदंगनेव ॥
मातुः समस्तजगतां महनियमूर्ति-
र्भद्राणि मे दिशतु भार्गवनंदनायाः ॥६॥
प्राप्तं पदं प्रथमतः खलु यत्स्वभावा-
न्मांगल्यभाजि मधुमाथिनि मन्मथेन ॥
मय्यापतेत्तदिदमंथरमीक्षणार्धं
मन्दोलसं च मकरोलयकन्यकायाः ॥७॥
दृष्टा विशिष्टमतयोपि यया दयार्द्र-
दृष्ट्या त्रिविष्टपपदं सुलभं लभंते ॥
दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां
पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः ॥८॥
दद्याद्दयानुपवनो द्रविणांबुधारा-
मस्मिन्नकिंचन विहंगशिशौ विषण्णे ॥
दुष्कर्मघर्ममपनीय चिराय दूरा-
न्नारायणप्रणयिनीनयनांबुवाहः ॥९॥
गीर्देवतेति गरुडध्वजवल्लभेति
शाकंभरीति शशिशेखरवल्लभेति ॥
सृष्टिस्थिति प्रलय सिद्धिषु संस्थितायै
तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै ॥१०॥
श्रुत्यै नमोस्तु शुभकर्मफलप्रसूत्यै
रत्यै नमोस्तुर रमणीयगुणार्णवायै ॥

शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै
पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायैः ॥११॥

नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूम्यै ।
नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै ॥१२॥

नमोऽस्तु देव्यै भृगुनंदनायै नमोऽस्तु विष्णोरुरसि स्थितायै ॥
नमोऽस्तु लक्ष्म्यै कमलालयायै नमोऽस्तु चक्रायुधवल्लभायै ॥१३॥

नमोऽस्तु हेमाम्बुजपीठिकायै नमोऽस्तु भूमण्डलनायिकायै ॥
नमोऽस्तु देवादिदयापरायै नमोऽस्तु शार्ङ्गायुधवल्लभायै ॥१४॥

यत्कटाक्ष समुपासनाविधिः सेवकस्य सकलार्थ संपदः ॥
संतनोति वचनांगमानसैस्त्वां मुरारिहृदयेश्वरीं भजे ॥१५॥

सरसिजनिलये सरोज हस्ते धवलतरांशुकगंधमाल्यशोभे ॥
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यं ॥१६॥

दिग्हस्तिभिः कनककुंभमुखावसृष्ट
स्वर्वाहिनी विमलचारुजलाप्लुतांगीम् ॥
प्रातर्नमामि जगतां जननीमशेष-
लोकाधिनाथ गृहिणीममृताब्धिपुत्रीम् ॥१७॥

कमले कमलाक्षवल्लभे त्वं करुणापूरतरंगितैरपांगैः ॥
अवलोकय माम‌किंचनानां प्रथमं पात्रमकृत्रिमं दयायाः ॥१८॥

स्तुवंति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम् ॥
गुणाधिका गुरुधनधान्यभागिनो भवन्ति ते भुवि बुधभाविताशयाः ॥१९॥

पद्मप्रिये पद्मिनि पद्महस्ते पद्मालये पद्मदलायताक्षि ॥
विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥२०॥

मंत्रावृत्तिसहस्रभानुसुभगा शुद्धात्मनो ये जना-
स्तेषां माधववल्लभा निजगृहे स्यात् सर्वदा निश्चला ॥
वृष्टिं हेममयीं प्रमोदजननीं पाने स्वयं कुर्वतीं
सद्विद्यावनितां विलासकुशलां पुत्रायुरारोग्यदाम् ॥२१॥

॥ श्री कनकधारा स्तवं संपूर्णम् ॥

# राजवैद्य प्रोक्त श्री सूक्तना प्रयोग

૧ પ્રત્યેક પ્રયોગમાં જે કાર્યસિદ્ધિ માટે—જે અભિલાષા માટે પ્રયોગ કરવો હોય તેનો સંકલ્પ કરવો. જે જે પ્રયોગમાં ન્યાસ ધ્યાન જુદા નથી આપ્યા તેવા પ્રયોગોમાં પાને ૬ ઠામાં લખેલા કરન્યાસ હૃદયાદિન્યાસ કરવા. અને ૨ જા પાનામાં લખેલા विद्युद्दाम આ મંત્રથી ધ્યાન કરવું પછી જપનો પ્રારંભ કરવો.

૨ દરેક પ્રયોગ કરનારે કે બ્રાહ્મણદ્વારા કરવામાં આવે તો તેઓએ પ્રયોગ ચાલતો હોય ત્યાંસુધી સત્ય બોલવું, ક્રોધ કરવો નહિ, સાદું ભોજન કરવું. બ્રહ્મચર્ય પાળવું, અને જે અભિલાષાથી પ્રયોગ ચાલતો હોય તે વસ્તુનું આંતર ધ્યાન ચિંતવન રાખવું. આ પ્રત્યેક પ્રયોગ માટે સમજવું.

૩ પ્રત્યેક પ્રયોગમાં એ સમજી રાખવું કે કોઈપણ પ્રયોગ પોતે કરવા અશક્ત હોય તો બ્રાહ્મણ દ્વારા કરાવી શકાય છે.

૪ દરેક પ્રયોગમાં દીવો ઘીનો, ધૂપ ગુગળનો કરવો. પ્રયોગ પહેલા બેસવાને ઠેકાણે તલવારથી કુંડાળું કરી વચમાં બેસવું પડખે તલવાર રાખવી.

૫ શ્રી સૂક્તના કોઈપણ મંત્ર વડે ચંડીપાઠને સંપુટિત કરી પાઠ કરવાનો હોય તો ૧૨૫ સવાસો પાઠ કરાય છે. તેથી પોતાની ધારણા સફળ થાય છે. ચંડીપાઠને સંપુટિત કરવો હોય તો પ્રથમ, મધ્યમ અને ઉત્તમ ત્રણ ચરિત્રોને સંપુટિત કરવાનું સમજવું અને દશાંશ હોમ વગેરે કરાય છે.

૬ શ્રી સૂક્તના પ્રયોગ બધી કોમના બધા આશ્રમના સ્ત્રીઓ, બાળકો, પુરૂષો સૌને કરવાનો અધિકાર છે. બતાવેલા પ્રયોગોમાં જપ પછી હોમ વગેરે કરવાના હોય તો જપથી દશાંશ હોમ, હોમથી દશાંશ તર્પણ, તર્પણથી દશાંશ માર્જન અને માર્જનથી દશાંશ અથવા માર્જન પ્રમાણે બ્રહ્મભોજન કરવાનું સમજવું.

ॐ ऐं ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

**પ્રયોગ ૧** લક્ષ્મીની મૂર્તિ સોનાની બનાવી તેની પૂજા હળદર સોના ચાંદીનાં કમળનાં ફુલથી કરવી. પછી સુવાસિની સૌભાગ્યવતી સ્ત્રી અને ગાયનું પૂજન કરી પૂનમના ચંદ્રમાં અથવા પાણીથી ભરેલા ઘડામાં શ્રી પરા નારાયણીનું ધ્યાન કરી સોનાની માળાથી કમળપત્રના આસન ઉપર બેસી શ્રી સૂક્તની આ हिरण्यवर्णां એ મંત્રને श्रीं ह्रीं क्लीं બીજ જોડી સવાર બપોર સાંજ એક

હજાર (દસ દસ માળા)નો જપ કરવો. આ પ્રમાણે એક લાખ પચીસ હજાર જપ પુરા થયે મધ ઘી કમળ પુષ્પથી દશાંશ હોમ કરવો અને તર્પણ માર્જન બ્રહ્મભોજન નિયમ પ્રમાણે કરવું. આ પ્રયોગ ૩૨ લાખનો છે પરંતુ સવા લાખ જપ હોમ વગેરે થઈ જાય એટલે બીજા સવા લાખનો પ્રારંભ કરવો. એ પ્રમાણે સવા લાખ સવા લાખ કરી ૩૨ લાખનો પ્રયોગ પુરો કરવો. તેથી રાજવૈભવ સોનું ઝવેરાત વૈભવ વિલાસ વાહન સ્ત્રી સંતાન અને સંસારનું સર્વ પ્રકારનું સુખ મળે છે. પહેલો પ્રયોગ પુરો થતાં જ લાભ દેખાવા મંડે છે. વેપાર ઉદ્યમ ધંધો નોકરી રાજકર્મ વગેરેમાં લાભ થાય છે કર્તા અને તેના કુટુંબીજનો ૧૦૦ વર્ષથી વધુ આયુષ્ય ભોગવી અંતે ઉત્તમ લોકમાં જાય છે.

**પ્રયોગ ૨ઃ-** ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद

प्रसीद ॐ श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः ॥
दुर्गे स्मृता हरसि भीतिमशेषजंतोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥
ॐ ऐं हिरण्यवर्णां हरिणीं सुवर्ण रजतस्रजां
चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥
दारिद्र्य दुःख भयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद
प्रसीद ॐ श्रीं ह्रीं श्रीं महालक्ष्म्यै नमः ॥

આ એક મંત્ર સંપુટિત થયો એ પ્રમાણે તાં મ આવહ થી લઈ યઃ શુચિઃ સુધીના ૧૬ મંત્રોને સંપુટિત કરી પાઠ કરવાથી ૧ પાઠ થયો તેવા ૧૨,૦૦૦ બાર હજાર પાઠ કરવા. ચંપાનાં ફુલ મધ ઘી ગોળનો ૧૨૦૦ બારસો પાઠનો હોમ કરવો. ૧૨ પાઠથી તર્પણ કરવું. ૧૨ પાઠથી માર્જન અને યથાશક્તિ બ્રહ્મભોજન કરવું. ધન ધાન્ય ઐશ્વર્ય સમૃદ્ધિ વચન સિદ્ધિ મળે છે

**પ્રયોગ ૩ઃ** સપ્તશતી-ચંડીપાઠનાં ત્રણે ચરિત્રોના પ્રત્યેક મંત્રને हिरण्यवर्णां આ મંત્રથી સંપુટિત કરી પાઠ કરવો હોમ તર્પણ માને આદિ દશાંશ કરવું બધી સિદ્ધિ મળે છે.

---

ॐ ऐं ॐ ह्रीं ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

પ્રયોગ ૧ લક્ષ્મીની સુવર્ણની મૂર્તિ કરી હળદર અને સોના ચાંદીના કમળ પુષ્પથી પૂજન કરી સુવાસિની સ્ત્રી અને ગાયનું પૂજન કરી પુર્ણિમાના ચંદ્રમાં અથવા જળથી ભરેલા કુંભમાં શ્રી નારાયણીનું ધ્યાન કરી સોનાની માળાથી કમળના આસન પર બેસી જપ કરવો. હમેશાં સાંજે કે રાતે એક હજાર જપ કરવો. ૩૨ દિવસનો પ્રયોગ છે. દશાંશ હોમ તર્પણ માર્જન આદિ કરવાં લક્ષ્મી સ્વપ્નામાં આવી ધનનાં સ્થાન અથવા ધન પ્રાપ્તિના જે સાધન પોતે ધાર્યાં હોય તેના માર્ગ બતાવશે ધન સમૃદ્ધિ સ્થિર રહેશે. દર ત્રણ વર્ષે ૩૨ દિવસ આ પ્રયોગ કરવાથી પોતાની જીંદગીમાં લક્ષ્મીની ખામી નહી રહે અને સ્ત્રી સંતાન પરિવાર સુખી થાશે.

પ્રયોગ ૨–तां म आवह આ બીજા મંત્રથી સપ્તશતી–ચંડીપાઠના પ્રત્યેક મંત્રને સંપુટિત કરી હમેશા સૂર્યોદય પહેલાં અથવા સાંજે ૧ પાઠ કરવો. ૧૨૫ સવાસો પાઠ પૂરા થયે હોમ વગેરે દશાંશ કરવાં મનવાંછિત કાર્ય સફળ થાય છે.

પ્રયોગ ૩–तांम आवह આ મંત્રને

शरणागत दीनार्त परित्राण परायणे ॥
सर्वस्यार्तिहरे देवि नारायणि नमोस्तु ते ॥

આ મંત્રથી સંપુટિત કરી ૧૨,૦૦૦ બાર હજાર જપ કરી તેના દશાંશ હોમ તર્પણ માર્જન બ્રહ્મભોજન કરવાં ધનધાન્ય સંપત્તિ મળે વિપત્તિ ટળે શત્રુ નષ્ટ થાય.

---

ॐ ह्रीं ॐ श्रीं अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ॥
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥३॥

પ્રયોગ ૧ આ મંત્રથી સવારે બપોરે સાંજે એમ દરેક વખતે ૧૦ માળા કરવી. રોજ સવારે સંકલ્પ ન્યાસ ધ્યાન કરી જપનો પ્રારંભ કરવો એ પ્રમાણે ૪ વર્ષ કરવાથી મંત્ર સિદ્ધ થાય છે. શત્રુઓને જીતી પોતે રાજા થાય છે રાજ્ય મળે છે. પોતે ગુમાવેલું કે શત્રુઓએ તથા ચક્રવર્તી રાજાએ આંચકી લીધેલું રાજ્ય મળે છે. આ પ્રયોગ ૩૬,૦૦,૦૦૦ છત્રીસ લાખ જપનો છે પોતે ન કરી શકે તો વિદ્વાન બ્રાહ્મણદ્વારા કરાવી શકાય છે.

પ્રયોગ ૨–આ મંત્રને      करोतु सा नः शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ॥

આ અર્ધા મંત્રનો સંપુટ કરી ૧૨,૦૦૦ બાર હજાર જપ કરવા. દશાંશ હોમ તર્પણ આદિ કરવાં. રાજ્ય ધન લક્ષ્મી યશ વધે. શત્રુ વશ થાય. ગત રાજ્ય મળે. ગત લક્ષ્મી મળે. ગત સ્થાન મળે.

---

ॐ श्रीं ॐ क्लीं कांसोस्मि तां हिरण्यप्राकारामार्द्रां ज्वलंतीं ॥
तृप्तां तर्पयन्तीं पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥

પ્રયોગ ૧–આ મંત્રનો પ્રયોગ ૮,૦૦,૦૦૦ આઠ લાખનો છે, સવારે તથા સાંજે અથવા સવારે બપોરે અને સાંજે સમય અનુકૂળ હોય તે પ્રમાણે જપ કરવો. જપ પુરો થયે ખાખરાના સમિધ દુધ ગાયનું ઘી મધનો દશાંશ હોમ વગેરે કરવાં. જો હંમેશાં સવારે અથવા સાંજે એક જ સમય જપ કરવાનો રાખ્યો હોય તો અમાસને દી પાંચ હજાર જપ કરવા. રાજ્ય મળે. રાજા જેવી સમૃદ્ધિ મળે. શત્રુનો ક્ષય થાય રાજા પ્રજા વશ થાય.

પ્રયોગ ૨ सर्वाबाधा प्रशमनं त्रैलोक्यस्याखिलेश्वरि ॥
एवमेव त्वया कार्यमस्मद्वैरिविनाशनं ॥

આ મંત્રથી સંપુટિત કરી ૧૨,૦૦,૦૦૦ બાર લાખનો પ્રયોગ છે. બ્રાહ્મણ દ્વારા પણ કરાવી શકાય છે. ગત રાજ્ય ગત સ્થાન ગત વૈભવ ફરી મળે છે. ધન ધાન્ય સમૃદ્ધિ ઐશ્વર્ય અખુટ મળે છે.

પ્રયોગ ૩ શ્રી સૂક્તના પહેલા મંત્રના પ્રયોગમાં બતાવ્યા પ્રમાણે ॐ श्रीं ह्रीं श्रीं कमले कमलालये આ મંત્રનો અને યુર્ગે સ્મૃતાનો અરધો મંત્ર પહેલાં અરધો પછી कां सोस्मितां એ મંત્રને સંપુટ કરી ૧૨,૦૦૦ બાર હજારનો જપ કરવો. દશાંશ હોમ વગેરે કરવાં. વૈભવ લક્ષ્મી સંપત્તિ વાહન મકાન સ્ત્રી સંતાનનો લાભ મળે છે.

---

ॐ क्लीं ॐ वदवद ॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ॥ तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥

પ્રયોગ ૧ આ મંત્ર સંકલ્પ ન્યાસ ધ્યાન કરી એક લાખ પાત્રીસ હજાર જપવાનો છે. ગાયના ગોંદરામાં બેસી હમેશાં ૧૦૦૦ એક હજાર જપ કરવો. એ

જલદી સિદ્ધિ: મેળવવી હોય તો સવાર બપોર સાંજ ત્રણ વખત એક એક હજાર જપ કરવો. અથવા બ્રાહ્મણદ્વારા કરાવવો. એક લાખ પીસતાલીસ હજાર: પૂરા થાય એટલે દશાંશ હોમ વગેરે કરવા. સૌભાગ્યવતી સ્ત્રીઓનું પૂજન કરવું. દેવીની મૂર્તિને કમળ પુષ્પથી પૂજન કરવું. ગાયુંને ખડ નાખવું, આ પ્રયોગમાં ધ્યાનમાં નીચેનો મંત્ર બોલવો.

अक्षीणभासां चंद्राख्यां ज्वलंतीं यशसा श्रियं ॥
देवैर्जुष्टामुदारां च पद्मिनीमीं भजाम्यहं ॥
त्वां वृणे त्वत्प्रसादेन ममालक्ष्मीर्विनश्यतु ॥

આ પ્રયોગથી દરિદ્રી માણસ ધનવાન થાય છે. અને ગયેલું ધન સંપત્તિ રાજ્ય જમીન વગેરે પાછાં મળે છે.

प्रयोग ૨–આ चंद्रां प्रभासां મંત્રથી ચંડીપાઠના પ્રત્યેક મંત્રને સંપુટિત કરી ૧૨૫ સવાસો પાઠ કરાય છે. દશાંશ હોમ વગેરે કરવા. દરિદ્રી નિર્ધન માણસ ધનવાન બને છે. ૧૦૦૦ એક હજાર પાઠ અને દશાંશ હોમ વગેરે કરવાથી મનવાંછિત કાર્ય સફળ થાય છે. રાજા પ્રજા આધીન થાય છે પૃથ્વીમાંથી કે અકસ્માત ધનનો લાભ મળે છે.

---

ॐ वदवद ॐ वाग्वादिनी ॥ आदित्य वर्णे तपसोधिजातो वनस्पति- स्तव वृक्षोऽथ बिल्वः ॥ तस्य फलानि तपसा नुदन्तु मा यान्तरा याश्च बाह्या अलक्ष्मीः ॥६॥

प्रयोग ૧–દેવીની સોનાની મૂર્તિ કરવી તેને ચંદન પુષ્પ બિલીપત્ર હળદર કંકુથી પૂજન કરી હમેશાં ૧ થી ૩ હજાર સુધી આ મંત્રનો જપ કરવો કુલ ૧૧,૦૦,૦૦૦ અગ્યાર લાખનો પ્રયોગ છે. જપ પૂરો થયે બીલીપત્ર ઘી ખીરનો દશાંશ હોમ તર્પણ વગેરે કરવાં. પોતે ન કરી શકે તો બ્રાહ્મણ પાસે કરાવવો. ऐं ह्रीं सौः ऐं श्रीं આ બીજથી કરન્યાસ હૃદયાદિ ન્યાસ કરવા તથા

उदयादित्य संकाशां बिल्वकाननमध्यगां ॥
तनुमध्यां श्रियं ध्यायेदलक्ष्मीपरिहारिणीं ॥

આ મંત્રથી ધ્યાન કરવું. આ પ્રયોગ કરનારે ફળ અને દુધનું ફરાળ કરવું કાંઈપણ અગ્નિ પર પકાવેલું ખાવું નહી. પાકેલાં બીલાં પણ ફરાળમાં ખાઈ શકાય બની શકે તો આ પ્રયોગ બીલીના ઝાડ નીચે બેસી કરાય તો ઉત્તમ છે.

આ પ્રયોગથી વચન સિદ્ધ થાય છે. અને લક્ષ્મી સ્થિર થઈ પોતાના ઘરમાં રહે છે. નિર્ધનતા, દરિદ્રતા, કલેશ, ક્ષુદ્રસત્વોનો ઉપદ્રવ, ભૂત, પ્રેત, પિશાચ વગેરેની નડતર દૂર થાય છે અને માણસ ધનવાન બને છે.

પ્રયોગ ૨:— આ મંત્રનો ૧૨,૦૦૦ બાર હજાર જપ કરવાનો છે. જો એકલો મંત્ર જપવો હોય તો ૩૬,૦૦૦ છત્રીસ હજાર જપ કરવો. દશાંશ હોમ તર્પણ માર્જન વગેરે કરવું. આથી પોતાના ઉદ્યોગ ધંધામાં વેપારમાં અને બીજા ધન મેળવવાના વ્યવસાયમાં ધનનો લાભ મળે છે.

પ્રયોગ ૩:—ज्ञानिनामपि चेतांसि देवी भगवती हि सा ॥
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥

આ મંત્રનો સંપુટ કરી અર્થાત વચમાં આદિત્યવર્ણે અને ઉપર નીચે જ્ઞાનિનાં એ રીતે સંપુટ કરી ૧૨,૦૦૦ બાર હજાર જપ કરી દશાંશ હોમ તર્પણ વગેરે કરવાં. આ પ્રયોગથી જે માણસની ઈચ્છા હોય તેનું આકર્ષણ થાય છે. અને તે માણસ પોતાને આધીન રહે છે રાજા અને રાજકર્તાઓને વશ કરવા માટે ૪૮,૦૦૦ અડતાલીસ હજાર જપ કરવો. અને દશાંશ હોમ વગેરે કરવાં.

---

ॐ वाग्वादिनी ॐ ऐं ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह ॥
प्रादुर्भूत सुराष्ट्रेस्मिन् कीर्तिमृद्धिं ददातु मे ॥७॥

પ્રયોગ ૧:— આ મંત્રનો ૩૨,૨૦,૦૦૦ બત્રીશ લાખ વીશ હજારનો પ્રયોગ છે. કરન્યાસ હૃદયાદિ ન્યાસ आं ह्रीं क्रौं ऐं श्रीं आं ह्रूं क्रौं ऐं આ નવ બીજથી કરવા ॐ अस्यश्री उपैतु मां मंत्रस्य कुबेर ऋषिः । मणिमालिनीलक्ष्मी देवता । अनुष्टुप्छंदः । श्रीं ब्लुं क्रीं बीजानि । ममाभीष्टकामना सिद्ध्यर्थे जपे विनियोगः । આ પ્રમાણે સંકલ્પ કરી નીચેના મંત્રથી ધ્યાન કરવું.

राजराजेश्वरीं लक्ष्मीं वरदां मणिमालिनीं ॥
देवीं देवप्रियां कीर्तिं वन्दे काम्यार्थसिद्धये ॥

દેવીની સોનાની મૂર્તિ કરી ધ્રો, બીલીપત્ર, હળદર, ચોખા, મોતી, કંકુ કેવડો, ડોલર ચંદન, પુષ્પ વગેરેથી પૂજન કરવું. લલિતામ્બા સહસ્રનામ સ્તોત્રના પ્રત્યેક નામ સાથે श्रीं બીજ લગાડી શ્રી યંત્રનું પૂજન કરવું સંધ્યા વગેરે નિત્ય કર્મ કરીને આ પ્રયોગનો પ્રારંભ કરવો. ઘીનો દીવો ખુગળનો ધૂપ, દ્રાક્ષ, ખજૂર, કેળાં, શેરડી, મધ, ઘી, દાડમ, કેરી, નાળીયેર વગેરે જે મળે તેનું નૈવેદ્ય ધરવું. સવારે અને બપોરે ૧૦૦૦ એક હજાર અને રાતે

૨૦૦૦ બે હજાર જપ હમેશાં કરવા. અઢી વરસમાં એક માણસ બત્રીસ લાખ વીશ હજારનો જપ પૂરો કરી શકે છે. જપ માટે પરવાળાની માળા લેવી. જપ પુરા થયે અધેડા ઘી ખીરનો દશાંશ હોમ કરવો તથા તેના દશાંશ તર્પણ વગેરે કરવું. ૮,૦૦,૦૦૦ આઠ લાખ હોમ માટે જરૂર જણાય એટલા બ્રાહ્મણોને બેસારી હોમ પુરો કરવો. આ બાબતમાં વિદ્વાન તાંત્રિકની સલાહ લઈ કાર્ય સંપૂર્ણ કરવું. હોમનું કામ ચાલે ત્યાં સુધી હમેશાં સૌભાગ્યવતી સ્ત્રીઓનું, ગાયોનું, પૂજન કરી તેનો વસ્ત્રથી સત્કાર કરી મિષ્ટાન્ન ભોજન કરાવવું. આ પ્રયોગથી કુબેર વગેરે દેવ પ્રત્યક્ષ અથવા સ્વપ્નમાં દર્શન દિયે છે અને ચિંતામણિ તથા નવ નિધિ નામના કુબેરના ગણ પ્રયોગ કર્તાને આધીન રહી ધન સુવર્ણ રત્ન રસાયન ઔષધી દિવ્યાંજન આપે છે.

જો એક જ માણસ આ પ્રયોગ કરતો હોય તો રાતના ૨૦૦૦ બે હજાર કે તેથી વધુ જપ કરી શકે છે અથવા બ્રાહ્મણો દ્વારા પ્રયોગ કરાવવાથી પ્રયોગ જલદી પૂરો થાય છે.

---

ॐ ऐं ॐ सौः ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ॥
अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात् ॥ ८ ॥

પ્રયોગઃ ૧—આ મંત્રનો ૩૨,૦૦૦ બત્રીસ હજારનો પ્રયોગ છે, હમેશાં રાતે ૩૦૦૦ ત્રણ હજાર જપ વીરાસનથી બેસી કરવો. અગ્નિહોત્રના કુંડની સામે બેસી જપ કરવાથી સારૂં ફળ મળે છે. રૂદ્રાક્ષની માળાથી જપ કરવે તલ ગોળ ઘીથી દશાંશ હોમ તર્પણ વગેરે કરવાં. એ રીતે એક પ્રયોગ પુરો થાય એટલે બીજો પ્રયોગ શરૂ કરવાં આ પ્રયોગમાં નીચેના મંત્રથી ધ્યાન કરવું.

अज्ञानपातकतमस्ततितीव्ररश्मिं दौर्भाग्यभूधरविदारणवज्रमीडे, ॥
रोगार्तिचोरफणिमर्दनपक्षिराजं लक्ष्मीपदद्वयमनर्थहरं सुखार्थी ॥१॥
खड्गं सवात चक्रं च कमलं वरमेव च ॥
करैश्चतुर्भिर्बिभ्राणां ध्याये चन्द्राननां श्रियम् ॥२॥

એક પ્રયોગ દશ ૧૦ દિવસમાં પુરો થાશે પછી બીજો પ્રયોગ શરૂ કરવો -પ્રયોગનો ચમત્કાર પહેલા પ્રયોગથી જ દેખાશે અને જેમ જેમ બીજો ત્રીજો પ્રયોગ આગળ ચાલશે તેમ કાર્ય સિદ્ધિ પ્રત્યક્ષ દેખાવા માંડશે ચાર પ્રયોગ પૂર્ણ થવાથી અભિલાષા પૂરી થાશે. કામની મહત્તા પ્રમાણે પ્રયોગ આગળ ચલાવવો. આ પ્રયોગથી શત્રુનો તથા વિના કારણ પોતાને નુકશાન કરનારાનો નાશ થાશે અને દરિદ્રતા નિર્ધનતા રોગ ભય જનપદોદ્ધ્વંસકારી

દૈવી તત્વોની પીડા વગેરે નષ્ટ થઇ પ્રયોગ કરનારો પોતાના કુટુંબ પરિવાર સાથે દીર્ઘાયુષી ઐશ્વર્યવાન થાય છે. ગ્રહ પીડા ક્રૂર ગ્રહોનાં અશુભ ફળ અને ક્ષુદ્ર સત્વોની પીડા વગેરે મટે છે અને ભાગ્યોદય થાય છે.

પ્રયોગ ૨:—શ્રી સૂક્તના ૮ મા મંત્રને

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान्सकलानभीष्टान् ॥
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां भजन्ते ॥ १ ॥

આ મંત્રનો સંપુટ કરી રાત્રે ૧૦૦૦ એક હજાર જપ કરવો. ૧૨,૦૦૦ બાર હજાર જપ પુરા થાય એટલે દશાંશ કાળા તલ ટોપરાં રાઈનો હોમ કરવો અને તેનો દશાંશ તર્પણ વગેરે કરવાં. પોતાને વિના કારણ નુકસાન કરનારા શત્રુના વિનાશ માટે, રોગની શાંતિ માટે અને બીજી વિપત્તિ પીડાના નિવારણ માટે અરીઠાના બી ની માળાથી કાળી ઉનના આસન પર વીરાસનથી બેસી ક્રોધ મુદ્રાથી જપ કરવો.

---

ॐ सौः ॐ हंसः ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीं ॥
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं ॥९॥

પ્રયોગ ૧ —આ મંત્રનો પ્રયોગ ૧,૬૦,૦૦૦ એક લાખ, સાઠ હજારનો છે. કમળ કાકડીની માળાથી કમળના પાન કે ફુલના આસન પર અથવા રેશમી વસ્ત્ર પર બેસી જપ કરવો. સ્થંડિલ પર કેસર કસ્તુરી ચંદન કપુર વગેરે સુગંધી દ્રવ્ય રાખી શ્રી લક્ષ્મી દેવીની મુર્તિની પૂજા કરી જપ કરવો. હમેશાં સવારે અને સાંજે નક્કી કરેલી સંખ્યામાં જપ કરવો. જપ પૂરો થાય એટલે કમળ ફુલ ઘી તલનો દશાંશ હોમ તર્પણ વગેરે કરવું. આ પ્રયોગથી ધનધાન્ય સમૃદ્ધિ સોનું ચાંદી રત્નો વગેરે મોટા પ્રમાણમાં મળે છે અને ઋદ્ધિસિદ્ધિ મોટાઇ રાજકર્તાઓ તરફથી સન્માન વગેરે લાભ મળે છે.

---

ॐ हंसः ॐ आं॥ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥

પ્રયોગ ૧:— આ મંત્રનો જપ ૮,૦૦,૦૦૦ આઠ લાખનો છે ऐं लं वं श्रीं આ બીજ મંત્ર સાથે લગાડી કરન્યાસ હૃદયાદિ ન્યાસ કરવા

तां ध्यायेत्सत्यसंकल्पां लक्ष्मीं क्षीरोदनप्रियाम् ॥
ख्यातां सर्वेषु भूतेषु तत्त्वज्ञानफलप्रदाम् ॥

